अथास्य शाकप्रवृत्तिं दर्शयति—येनेति ॥ येन श्रीविक्रमार्कभूभुजा कलियुगेऽस्मिन् वसुधातले संगरे सर्वासु सर्वा दिशः सर्वदिक्पर्यंतं पंचानां नवतेः पंचपंचाशत्कोट्यः पंचपंचाशल्लक्षाणि पंचपंचाशत्सहस्राणि पंचशतानि पंचपंचाशत् एभिः प्रमानं मितान् ५५५५५५५५५शकगणान् म्लेंछान् हत्वा शाकप्रवृत्तिः कृता ॥ पुनः श्रीविक्रमादित्येन प्रतिदिनं मुक्ताफलं मणिः रत्नं स्वर्णं हेम गौः सुरभिः सप्तिरश्वः इभो हस्ती इत्यादीनामपवर्जनेन दानेन सुवर्णाननः दानादिचतुर्विधो विप्रादिचतुर्वर्णात्मको वा धर्मो विहितः कृतः ॥ १३ ॥

उद्दामद्रविडद्रुमैकपरशुर्लाटाटवीपावको वेल्लद्वंगभुजंगराजगरुडो गौडाब्धिकुंभोद्भवः ॥ गर्जद्गुर्जरराजसिंधुरहरिर्धारांधकारार्यमा काम्बोजांबुजचंद्रमा विजयते श्रीविक्रमार्को नृपः ॥ १४ ॥

अथास्य दिग्विजयमाह—उद्दामेति ॥ स्पष्टम् ॥ १४ ॥

येनाप्युग्रमहीधराग्रविषये दुर्गाण्यसह्यान्यहो नीत्वा यानि नतीकृतास्तदधिपा दत्तानि तेषां पुनः ॥ इंद्रांभोध्यमरद्रुमस्मरसुरक्ष्माभृद्गुणेनांजसा श्रीमद्विक्रमभूभृताखिलजनांभोजेंदुना मंडले ॥ १५ ॥

अथास्य प्रभुत्वादिगुणान् वर्णयति—येनेति ॥ अंजसा शीघ्रं येन श्रीमद्विक्रमभूभृता राज्ञा उग्रमहीधरविषये पर्वत तुंगशृंगाग्रेऽसह्यानि गृहीतुमशक्यानि दुर्गाणि यानि अहो आश्चर्ये नीत्वा समादाय तदधिपास्तेषां दुर्गाणां स्वामिनो नतीकृता नम्रीकृताः पुनस्तेषां दुर्गाधिपानां तानि दुर्गाणि दत्तानि । किंभूतेन श्रीविक्रमार्केण इंद्रः अंभोधिः समुद्रः अमरद्रुमः कल्पतरुः स्मरः कामः सुरक्ष्माभृत् मेरुः एषां गुणाः प्रभुत्वगंभीरत्वदातृत्वसुरूपत्वास्थिरत्वाख्या यस्मिन् स तेन । पुनः किंभूतेन मंडले देशे खलजना दुर्जनास्त एवांभोजानि कमलानि तेषु इंदुरिव इंदुस्तेन खलानां परामवकारकेन इत्यर्थः ॥ जलकमलानि चंद्रातपेन म्लानित्वं समागच्छंतीति रूढिः ॥ १५ ॥

यद्राजधान्युज्जयिनी महापुरी सदा महाकालमहेशयोगिनी ॥ समाश्रयिप्राण्यपवर्गदायिनी श्रीविक्रमार्कोऽवनिपो जयत्यपि ॥ १६ ॥

अथास्य पुरीं वर्णयति—यद्राजेति ॥ समाश्रितास्तत्रोषिता ये प्राणिनो लोकास्तेषामपवर्गदायिनी यद्राजधानी विक्रमस्य मूलनिवासनगरी उज्जयिनी यच्छब्दापेक्षया तच्छब्दोऽग्रे ग्राह्यः शेषं सुगमं ॥ १६ ॥

यो रुमदेशाधिपतिं शकेश्वरं जित्वा गृहीत्वोज्जयिनीं महाहवे ॥
आनीय संभ्राम्य मुमोचयत्त्वहो स विक्रमार्कः समसह्यविक्रमः ॥१७॥

यो रुम्मेति ॥ यो विक्रमार्को रुम्मदेशाधिपतिं शकेश्वरं म्लेछनायक आहवे सग्रामे जित्वा गृहीत्वा च उज्जयिनीमानीय संभ्राम्य च तु पुनस्तं शकेश्वरं मुमोच अहो इति आश्चर्ये शेषं स्पष्टं ॥ १७ ॥

तस्मिन् सदाविक्रममेदिनीशे विराजमाने समवंतिकायां ॥
सर्वप्रजामंगलसौख्यसंपद्बभूव सर्वत्र च वेदकर्म ॥ १८ ॥

तस्मिन्निति स्पष्टं ॥ १८ ॥

शंकादिपंडितवराः कवयस्त्वनेके ज्योतिर्विदः सभमवंश्च
वराहपूर्वाः ॥ श्रीविक्रमार्कनृपसंसदि मान्यबुद्धिस्ते-
रप्यहं नृपसखा किल कालिदासः ॥ १९ ॥
काव्यत्रयं सुमतिकृद्रघुवंशपूर्वं पूर्वं ततो ननु कियच्छ्रु-
तिकर्मवादः ॥ ज्योतिर्विदाभरणकालविधानशास्त्रं
श्रीकालिदासकवितो हि ततो बभूव ॥ २० ॥

शकादीति स्पष्टं ॥ २० ॥

वर्षैः सिंधुरदर्शनाम्बरगुणै३०६८ र्याते कलौ संमिते मासे माधवसंज्ञिके च विहितो ग्रंथक्रियोपक्रमः ॥ नानाकालविधानशास्त्रगदितज्ञानं विलोक्यादरादूर्जे ग्रंथसमाप्तिरत्र विहिता ज्योतिर्विदा प्रीतये ॥ २१ ॥

अथ ग्रंथारम्भसमाप्तिकालौ दर्शयति—वर्षैरिति ॥ सिंधुरो हस्ती ८ दर्शनानि षट् ६ अम्बरं खं० गुणास्त्रय ३ एभिर्वर्षैः ३०६८ संमिते प्रमिते कलौ कलियुगे याते गते सति माधवसंज्ञिके वैशाखे मासे मया ग्रंथक्रियोपक्रमो ग्रंथकरणमारम्भो विहितः कृतः ॥ च पुनः ऊर्जे कार्तिकमासे ग्रंथसमाप्तिर्विहिता कृता कस्यै ज्योतिर्विदां दैवज्ञानां प्रीतये किं कृत्वा नानाकालविधानशास्त्रगदितज्ञानमादरात् विलोक्य दृष्ट्वा । अत्र ग्रंथान्ते मंगलमपि दर्शितं यतो ज्योतिर्विदा प्रीता प्रसन्ना चासौ या लक्ष्मीश्च प्रीतया तस्याः संबोधने हे प्रितये हे प्रसन्न-लक्ष्मी त्वमसि ॥ २१ ॥

इति श्रीकविकालिदासोदिते ज्योतिर्विदाभरणे ग्रंथाध्यायनिरूपणक्रमनृपविक्रमवीरवर्णना यो द्वाविंशतितमः ॥ २२ ॥

*अथ सुखबोधिकाकर्तृप्रशस्तिमाह ॥ व्यस्तैकावयहप्रभात स्याल्कारारातीनराशिमना ॥ स्तुधा*
नकलोपेत जयताज्जैनदर्शन ॥१॥ निखदकनकगात्रो रत्नपात्रो गुणाढ्यो विविधक्षविद्याद्य
प्रमाऊँ दधान ॥ सकलसुरविभूना सेव्यसामीप्यदायी जयति सतनमर्हन् वर्द्धमान सुरद्रु॥

  

॥२॥ श्रीवर्द्धमानात्तु परंपराप्ते पदेऽभवत् सूरिवरः श्रियाढ्यः ॥ चंद्रप्रभाख्यो विधुकान्तिकीर्ति श्रीपौर्णिमीयाभिधपक्षगच्छे ॥ ३ ॥ श्रीसिद्धराजसदसीह विजित्य सूरीन् वादं विधाय वत षण्मितमासकालं ॥ यः पूर्णिमां जिनवरागमसूक्तियुक्त्या सत्योद्धवार दृढधीरनवद्यनूत्यः ॥४॥ तत्पदे सुक्रियायुक्तो धर्मघोषस्ततो यतः ॥ खद्विचन्द्रमिता १२० जाताः शाखाः पौर्णिमिकाभिधाः ॥५॥ परंपराप्ते क्रमतस्ततः श्रीविद्याप्रभः सूरिवरोऽत्र पेदे ॥ बभूव शास्त्रार्थसुभासमुद्रप्रोल्लासने चंद्रसमानधर्मा ॥६॥ ललितप्रभसूरिकुंजरोऽजनि पेदे तत आश्रितः श्रियं ॥ विनयप्रभसूरिपुंगवोऽजनि पेदे तत आश्रितः श्रियं॥७॥ सप्तद्यपूर्वाचलभानुमंतो जयंति यद्यस्किड सूरिराजाः॥ नाम्नार्थतश्चापि गुणैरशेषैः सर्वोत्तमैः श्रीमहिमाप्रभाख्याः ॥ ८ ॥ एषां प्रतापतपनश्च यशःसितांशुर्भुव्यंबरे स्वरिसमस्तपदे जयातः॥ नित्योदयौ विदधतो खलराहुनाशं चित्रं ततो न महतामिमितानुभावः ॥ ९ ॥ आमोक्तौ परिपूर्णनिर्मलमतिः शब्दानुशास्तौ प्रधीः काव्ये कर्कशतर्कशास्त्रकलने गाणित्यशास्त्रे तथा ॥ सांगे श्रीमहिमाप्रभाख्यसुगुरुः सूरीश्वरो राजते ख्यातः सर्वगणे परोपकरणाद् विद्यादिदानेन वै ॥ १० ॥ तच्छिष्योऽभूद्भावरत्नाभिधानस्तत्पादाब्जोपासनासक्तचित्तः ॥ एतत्सूक्त्या कालिदासस्य गुर्व्या ज्ञातार्थो यस्तद्गुरोर्ज्ञानलाभात् ॥११॥ तेनासौ सुखबोधिका सुललिता ज्योतिर्विदां तुष्टये शास्त्रस्यास्य कृता यथामति मया शोध्या सुधीभिर्यतः॥ संश्लिष्टानि पदान्यनेकश इहैकैकाक्षराख्यान्यपि काठिन्यं कविना गिरां समुदितं त्याज्यं खलत्वात्पुनः ॥१२॥ परिश्रमोऽयं सफलो ममास्त्वास्ताद्धाच्यमानेन विलेखनेन ॥ सतां प्रसादाच्च ततो दधानैः खलैः खलत्वं जगतीह किं स्यात् ॥ १३ ॥ सज्जनेभ्यो नमो नित्यं खलेभ्योऽपि नमो नमः ॥ मन्वंत्येके गुणज्ञा यद्दोषज्ञास्त्वपरे दृढं ॥१४॥ उभयेषां कृपादृग्भिः कृतिर्मे यातु शुद्धितः ॥ अग्निक्षारे यथा हेम निर्दोषं च सुवानता ॥१५॥ श्रीविक्रमार्कादहिपद्धयोर्वीमिते गतेऽब्दे खलु राध १७६८। मासे ॥ शुक्ले तृतीयेऽप तिथौ गभस्तिवारे समाप्ता सुखबोधिकेयम् ॥ १६ ॥ इति श्रीपौर्णिमीयगच्छाधिराजभट्टारकपुरंदरश्री५श्रीमहिमाप्रभसूरीश्वरचरणसरोरुहचंचरीकायमानशिष्यभावरत्नविरचितायां श्रीकालिदासकृतज्योतिर्विदाभरणस्य सुखबोधिकायां ग्रंथाध्यायनिरूपणक्रमश्रीविक्रमार्कनृपवर्णनोनाम द्वाविंशतितमोऽध्यायः संपूर्णः ॥ २२ ॥ गच्छे श्रीमहिमाप्रभाख्यसुगुरोः श्रीपौर्णिमीयाभिधो शिष्यः सूरिवरस्य मांडणसुतो यो भावरत्नाभिधः ॥ वाग्हडकुलसमुद्भवः सुकृतवान् श्रीपत्तने पत्तने छंदोव्याकरणाभिधस्मरणतोऽलंकारयुक्तामिमां॥१॥वक्रवाळधिमारूढो वरडाव्हो महाबली ॥ सुखाय क्षेत्रपालोऽस्तु राकापक्षकचारिणाम् ॥ २ ॥ अस्य मूलग्रंथस्य सर्वाध्याय राशीकृतवृत्तसंख्या १४२० श्लोकमानं तु २४२० अथ वृत्ते संख्या सप्तसहस्रा ७००० सूत्रवृत्तिमीलने ग्रं० ९४२० अनुष्टुभ्यः ॥ श्रीः

समाप्तम्.

आ० नं० १ पृ० ९७ श्लो० २८




आ० नं० २ श्लो० २४ पृ० १२३




आ० नं० ३ पृ० १२६ श्लो० ३५




आ० नं० ४ पृ० १३१ श्लो० १४




आ० नं० ५ पृ० १२५ श्लोक ३३




आ० नं० ८ पृ० १३८ श्लो० ४५




आ० नं० ७ पृ० १३७ श्लो० ४१



आ॰ नं॰ १४ पृ॰ १६५ श्लोक ३१

वार काल चक्रम्.

| ई | पू<br>श. | आ<br>शु. |
|---|---|---|
| उ.<br>र. | | द<br>गु. |
| वा चं. | प<br>म. | बु. नै. |

आ॰ न॰ १५ पृ१६५ श्लो ३१

वारपाश चक्रम्.

| ई बु. | पू.<br>म. | चं. अ. |
|---|---|---|
| उ. वृ. | | र. द |
| वा शु. | प<br>श | नै |

आ॰ नं॰ १६ पृ॰ १६६ श्लो ३२

चंद्र ग्रह चक्रम्.

| ई. | पू.<br>१।५।९ | अ. |
|---|---|---|
| उ.<br>४।८।१२ | | द.<br>२।६।१० |
| वा | प.<br>३।७।११ | नै. |

आ॰ नं १७ पृ॰ १६६ श्लो॰ ३४

तिथि पाश चक्रम्.

| ई. | पू ४<br>२८ १२<br>२० | अ. |
|---|---|---|
| उ ६<br>१४ ६<br>२२ | | द २६ २<br>१०<br>१८ |
| वा. | १२ प ३०<br>२० २८ | नै. |

आ॰ न॰ १८ पृ॰ १६६ श्लो॰ ३४

तिथि काल चक्रम्.

| ई | ७ पू २३<br>८ १६ २४ | अ |
|---|---|---|
| १।२।९<br>उ २।१०<br>१७।१८<br>२५।२६ | | ८।२१।२९।३०<br>द ६।१४<br>२२।१३।२९।८ |
| वा | ३ प ३१<br>४८ २७<br>११ १९<br>१३ २० | नै |

आ॰ न॰ १९ पृ॰ १६८ श्लो॰ ४३

परिघदंडचक्रम्.

कृ मा पू । आ । ह । चि । स्वा । वि

परिघ दंड चक्रम्

आ॰ नं॰ २०।२१ पृ॰ २०६ श्लो॰ ४५

फणिचक्रम्.





आ॰ नं॰ २४ पृ॰ २४४ श्लो॰ ८१

खड्गचक्रम्.

अ १

स्कध २ पा ३ १ मु

मुष्ट १

३ अ स्क २ पा अ २ मु

आ॰ नं २५ पृ २४५ श्लो॰ ८३

पट्टचक्रम्.

ई. गु. १ पू. २ गु. १ य अ.

उ. २ गु २ अगुण १ य द

य १ २ मध्य. प. ३ गु नै

आ० नं० ३० पृ० २५७ श्लो० १७ अहिचक्रम्



अहिचक्रम् आ० नं० २९

पृ २५७ श्लो १६

अहिचक्रम् आ० नं० २८

पृ २५७ श्लो १५



प्रवोलीचक्रम् आ न ३२ पृ २६२ श्लो १७

| | | |
|---|---|---|
| २ | ६ | २ |
| ४ | ३ | ४ |
| २ | ४ | २ |

अहिचक्रम् आ० न० ३१ पृ २५८ श्लो-२०



दिग्वत्सचक्रम्

आ न ३३ पृ २६२ श्लो २९

| | | |
|---|---|---|
| ई | पू ६।७।८ | आ |
| उ ३।४।५ | | द ९।१०।११ |
| वा | १२।१।२ प | नै |

आ० न० ३५ पृ० २७० श्लो० १०



अथ गृहवत्सचक्रम्

आ न ३४ श्लो ५२ पृ २६५



## षोडशगृहभेदाः श्लो० ४२ पृ० २७८

| ऽऽऽऽ १ | ।ऽऽऽ २ | ऽ।ऽऽ ३ | ।।ऽऽ ४ | ऽऽ।ऽ ५ | ।ऽ।ऽ ६ | ऽ।।ऽ ७ | ।।।ऽ ८ |
|---|---|---|---|---|---|---|---|
| ध्रुव | धान्य | जय | नन्द | खर | कान्त | मनोरम | सुमुख |
| ऽऽऽ। ९ | ।ऽऽ। १० | ऽ।ऽ। ११ | ।।ऽ। १२ | ऽऽ।। १३ | ।ऽ।। १४ | ऽ।।। १५ | ।।।। १६ |
| दुर्मुख | क्रूर | विपक्ष | धनद | क्षय | आक्रन्द | विपुल | विजय |

आ० न० ३५ पृ० २७१ श्लो० १२




आ० न० ३६ पृ० २८० श्लो० ५५




आ० न० ३७ पृ० २८४ श्लो० ७




आ० न० ३ अ पृ० २९६ श्लो० १५




पृ० २९८ श्लो० २३ सिंहासनत्रयचक्रम् आ० न० ३९।४०।४१






राजमुद्राचक्रम्-
आ॰ नं॰ ३८ श्लो॰ २२ पृ॰ २९८




कूपचक्रम्-
आ॰ नं॰ ४५ पृ॰ ३०८ श्लो॰ १५



वापी चक्रम्-
आ॰ नं॰ ४६ पृ॰ ३०९ श्लो॰ १६




तडागचक्रम्-
आ॰ नं॰ ४७ पृ॰ ३०९ श्लो॰ १७

कुंडचक्रम्-
आ॰ नं॰ ४७ अ




कूपचक्रम्- आ॰ नं॰ ५२ पृ॰ ३१३ श्लो॰ ३४




तैलिकयंत्रम्- आ॰ नं॰ ५३ पृ॰ ३१४ श्लो॰ ३६






